इति। बृहस्पतिरपि—

'आकारणे रक्षणे च साक्ष्यर्थि-प्रतिवादिनाम्।
सभ्याधीनः सत्यवादी कर्तव्यस्तु स पूरुषः' ॥

इति। राज्ञा कतिपयैर्वणिग्भिरधिष्ठितं सदः कर्तव्यम्। तदाह कात्यायनः—

'कुल-शील-वयो-वृत्त[1]-वित्तवद्भिरमत्सरैः।
वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम्' ॥

इति। कुलभूतैर्वृन्दभूतैरित्यर्थः। तेषामुपयोगमाह स एव—

'श्रोतारो वणिजस्तत्र कर्तव्या न्यायदर्शिनः[2]'।

इति। यथोक्तराजादियुक्तायाः सभाया दशाङ्गानि सप्रयोजनान्याह बृहस्पतिः—

'नृपोऽधिकृतसभ्याश्च स्मृतिर्गणक-लेखकौ।
सहेमाग्न्यम्बु-पुरुषाः[3] साधनाङ्गानि वै दश ॥
एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः।
न्यायं पश्येत्कृतमतिः सा सभाऽध्वरसंमिता ॥
दशानामपि चैतेषां कर्म प्रोक्तं पृथक्पृथक्।
वक्ताऽध्यक्षो[4] नृपः शास्ता सभ्याः कार्यपरीक्षकाः ॥
स्मृतिर्विनिर्णयं ब्रूते जयदानं धनं तथा।
शपथार्थौ[5] हिरण्याग्नी जलं तृषित-लुब्धयोः[6] ॥

---

१. D. reads °वृद्धैः for °वृत्त°. २. D. reads °दर्शने for °दर्शिनः ३. A. B. C. read हेमाग्न्यम्बु-स्वपुरुषाः for सहेमाग्न्यम्बु-पुरुषाः. ४. B. originally reads वक्ताऽभ्यस्तो, but corrected वक्ताऽध्यक्षो; while D. reads सभाध्यक्षो for वक्ताऽध्यक्षो. ५. C. and D. read शपथार्थे for शपथार्थौ. ६. B. originally reads °क्रुद्धयोः, but corrected °लुब्धयोः; while C. reads °क्षुब्धयोः for the same.

गणको गणयेदर्थं लिखेन्न्यायञ्च लेखकः ।
प्रत्यर्थिसभ्यानयनं साक्षिणां च स पूरुषः ॥
वाग्दण्डश्चैव धिग्दण्डो विप्राधीनौ तु तावुभौ ।
अर्थदण्ड-वधावुक्तौ राजायत्तावुभावपि ॥
राज्ञा ये विदिताः सम्यक् कुल-श्रेणि-गणादयः ।
साहस-न्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम्' ॥

इति । यथाविधिविचारे राज्ञः फलमाह कात्यायनः—

'सप्राड्विवाकः सामात्यः सब्राह्मण-पुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः' ॥

इति । वैपरीत्ये दोषमाह मनुः—

'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति' ॥
( म. स्मृ. ८. १२८. )

इति । सभ्यानां फलमाह बृहस्पतिः—

'अज्ञानतिमिरोपेतान् संदेहपटलान्वितान् ।
निरामयान्यः कुरुते शास्त्राञ्जनशलाकया ॥
इह कीर्तिं राजपूजां लभते स्वर्गतिं च सः ।
लोभद्वेषादिकं त्यक्त्वा यः कुर्यात् कार्यनिर्णयम् ॥
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत्' ।

इति । विपक्षे दोषमाह कात्यायनः—

'न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम् ।
तत्र धर्मो ह्यधर्मेण हतो हंति न संशयः ॥

१. C. and D. read °वर्ग्ये for वर्ये. २. A. has marginal reading °थि° for °धी°; while B. had originally °पि°, but corrected became °श्री.° ३. C. reads °गणोदयः for °गणादयः.

अपन्यायप्रवृत्तं तु नोपेक्षेरन्[1] सभासदः ।
उपेक्षमाणाः सनृपा नरकं यान्त्यधोमुखाः ॥
अन्यायेनापि तं यांतं येऽनुयांति[2] सभासदः ।
तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥
न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः ।
कर्तव्यं[3] तत्प्रियं तत्र न सभ्यः किल्बिषी भवेत्' ॥

इति । कार्यानिष्पत्तावपि यथाशास्त्रवादिनो नास्ति प्रत्यवाय इति स एवाह—

'सभ्येनावश्यकर्तव्यं धर्मार्थसहितं वचः ।
शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनघः' ॥

इति । यदा तु राजा यथाशास्त्रं धर्मं श्रुत्वा दोषकारिणे पक्षपातं न करोति तदा निष्पापो[4] भवति । तदाह मनुः—

'राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते[5]' ॥
(म. स्मृ. ८. १९.)

इति । अन्यथावादिनः सभ्यस्य दण्डमाह नारदः—

'रागादज्ञानतो वापि यो लोभादन्यथा वदेत् ।
सभ्योऽसभ्यः स विज्ञेयस्तं पापं विनयेद्भृशम्' ॥

इति । कात्यायनोऽपि—

---

१. A. in margin reads उपेक्षेयुः and B. originally and corrected reads उपेक्षन्ते; while C. D. उपेक्ष्यं तत् for उपेक्षेरन्. २. D. substitutes तु for ऽनु. ३. A. has marginal reading स्मर्तव्यं; while B. has in correction and C. D. as usual read वक्तव्यं for कर्तव्यं. ४. C. reads न पातो for निष्पापो. ५. B. originally reads विद्यन्ते, but corrected निन्द्यते; while C. नेष्यन्ते for the same.

'स्नेहादज्ञानतो वापि लोभाद्वा मोहतोऽपि वा ।
तत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यः स्मृतो हि सः' ॥[1]

इति । याज्ञवल्क्योऽपि—

'रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक्पृथग्दण्ड्या विवादाद्द्विगुणं* दमम्' ॥

(या. स्मृ. २. ४.)

इति । बृहस्पतिरपि—

'अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्ते वञ्चकाश्चैव निर्वास्याः सर्व एव ते' ॥

इति । कात्यायनः—

*अत्र विज्ञानेश्वरः—विवादपराजयनिमित्ताद्दमाद्द्विगुणं दमं दण्ड्याः न पुनर्विवादास्पदीभूतात् द्रव्यात् । तथा सति स्त्रीसङ्ग्रहणादिषु दण्डाभावप्रसङ्गः । राग-लोभ-भयानामुपादानं रागादिष्वेव द्विगुणो दमो नाज्ञान-मोहादिषु इति नियमार्थम् । न च—

'राजा सर्वस्येष्टे ब्राह्मणवर्ज्यम्'—

इति गौतमवचनात् न ब्राह्मणा अदण्ड्या इति मन्तव्यम् । तस्य प्रशंसार्थत्वात् । यत्तु—

'षड्भिः परिहार्यो राज्ञा वध्यश्चा-ऽबन्ध्यश्चा-ऽदण्ड्यश्चा-ऽबहिःकार्यश्चा-ऽपरिवाद्यश्चाऽ-परिहार्यश्च

इति तदपि 'स एष बहुश्रुतो भवति । लोक-वेद-वेदाङ्गवित् वाकोवाक्येतिहासपुराणकुशलः तदपेक्षस्तद्वृत्तिश्चाष्टाचत्वारिंशत्संस्कारैः संस्कृतः त्रिषु कर्मस्वभिरतः षट्सु वा समयाचारिकेष्वभिविनीतः' । इतिप्रतिपादितबहुश्रुतविषयम् । न ब्राह्मणमात्रविषयं इति ।

१. C. and D. read सभ्यो दण्ड्यः for दण्ड्योऽसभ्यः. २. C. and D. read द्वेषात् for लोभात्. ३. C. reads दमः for दमम्.

'अनिर्णीते तु यद्यर्थे सम्भाषेत रहोऽर्थिना ।
प्राड्विवाकोऽथ[1] दण्ड्यः स्यात्सभ्याश्चैव विशेषतः' ॥

इति । राजादीनां सभायामुपवेशनप्रकारमाह बृहस्पतिः—

'पूर्वामुखस्तूपविशेद्राजा सभ्या उदङ्मुखाः ।
गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः' ॥

इति । सभोपविष्टा[2] नृपादयो यस्यांगानि तमङ्गिनं व्यवहारं पुरुषरूपेण परिकल्पयति स एव—

'एषां मूर्द्धा नृपोङ्गानां मुखं चाधिकृतः स्मृतः[3] ।
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणक-लेखकौ ॥
हेमाग्न्यम्ब्वन्न-पुरुषाः पादौ च पुरुषस्य च' ।

इति । या वृद्धराहित्यादिदोषरहिता सा मुख्या सभा । तदुक्तं महाभारते—

'न सा सभा यत्र न संति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम्[4]' ॥

(ना. स्मृ. ३. १८.)

इति । इति सभा निरूपणम् ।

---

१. D. reads ऽपि for ऽथ. २. A. has marginal reading सभाप्रविष्टा; while B. originally reads the same, but corrected सभोपविष्टाः. ३. D. reads कृतः for स्मृतः. ४. B. originally reads कपटेना°, but corrected यच्छलेना°. C. also reads as B.'s corrected form.

अथ व्यवहारदर्शनविधिर्निरूप्यते । तत्र प्रजापतिः—

'राजाऽभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः ।
धर्मासनगतः पश्येद्व्यवहाराननुल्बणम्' ॥

इति । नारदः—

'* तस्माद्धर्मासनं प्राप्य राजा विगतमत्सरः ।
समःस्यात्सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम् ॥ ( ३४ )
( ना. स्मृ. १. ३४. )

इति । †वैवस्वतव्रतमुक्तं बृहस्पतिना—

---

* यस्मात्—
धर्मेणोद्धरतो राज्ञो व्यवहारान् कृतात्मनः ।
सम्भवन्ति गुणाः सर्वे सत्यं वन्हेरिवार्चिषः ॥ ( ३२ )
धर्मश्चार्थश्च कीर्तिश्च लोकपक्तिरुपग्रहः ।
प्रजाभ्यो बहुमानं च स्वर्गे स्थानं च शाश्वतम् ॥

तस्मादेवंविधमहार्थलाभात् राजा विगतमत्सरो राग-द्वेषविवर्जितो वैवस्वतो यमो धर्मराजः तस्य व्रतं लोकानां स्वकर्मजातशुभाशुभ-फलदत्वं तद्विभूतिवान् धारयन् धर्मासनं धर्माधिकरणं प्राप्य सर्वभूते-षु समः स्यादिति भावः ।

† 'वैवस्वतव्रतमुक्तं बृहस्पतिना' नास्तीदं A. संज्ञकपुस्त-कातिरिक्तेष्वादर्शपुस्तकेषु । नोपलभ्यते चाधस्तनं वाक्यं बृहस्पतिस्मृतौ । D. संज्ञकपुस्तके इदं वचनं यमवाक्यत्वेन दर्शितम् । परं नोपलभ्यते यमस्मृतौ । तस्मादिदं बृहस्पतिवाक्यं यमवाक्यं वेति विचारयन्तु सुधिय इत्यलमप्रसक्तेन ।

---

१. A. had marginal reading °स्थान° and original reading °नप° similarly B. has corrected reading °सान° and original °सन° C. also reads °नप° for °सन°.

'यथा[1] यमः प्रिय-द्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा नियंतव्याः प्रजास्तद्धि यमव्रतम्' ॥

इति । यद्व्यवहारप्रतिपादकं धर्मशास्त्रं यच्च तदन्तर्गतं द्रव्यदण्डादिरूपमर्थशास्त्रं तदुभयमपि व्यवहारदर्शिना[2] राज्ञाऽनुसरणीयम् । तदाह स एव—

'धर्मशास्त्रा-ऽर्थशास्त्राभ्यामविरोधेन पार्थिवः ।
समीक्षमाणो निपुणं[3] व्यवहारगतिं नयेत्'* ॥
( ना. स्मृ. १. ३७ )

इति । धर्मशास्त्राणि पितामहेन दर्शितानि—

'वेदाः साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा ।
एतानि धर्मशास्त्राणि पुराणं[4] न्यायदर्शनम्' ॥

इति । ननु-नधर्मशास्त्रांतर्गतमर्थशास्त्रम् । किंत्वन्यदेवं नीत्यात्मकम्[5] । यत्तु भविष्यत्पुराणे[6] दर्शितम्—

---

* क्वचित् धर्मशास्त्रोक्तं अर्थशास्त्रविरुद्धं भवति । क्वचित् पुनरर्थशास्त्रोक्तं धर्मशास्त्रविरुद्धं भवति । तयोरितरेतरतामालोच्य यथा लोकाचारविरुद्धं न भवति तथा ससभ्योऽपि राजा व्यवहारगतिं नयेत् निर्णयं कुर्यादित्यर्थः ।

---

१. D. split the two words यथा यमः, and quotes them as author and reads the following thus:-प्रिय-द्वेष्यौ समौ ज्ञात्वा for यथा यमः प्रियद्वेष्यौ. २. A. has marginal reading; °वर्तिना for °दर्शिना; while B. originally reads °दर्शिना and corrected °वर्तिना. ३. D. reads निपुणो for निपुणं. ४. D. reads पौराणं न्यायविस्तमम् for पुराणं न्यायदर्शनम्. ५. A. in margin reads रीत्यात्मकम्; while B. originally reads रीत्या° and corrected नीत्या°. ६. D. reads भविष्यपुराणे, for भविष्यत्पुराणे.

'षाड्गुण्यस्य प्रयोगश्चोऽप्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगो व्यास-समासतः ॥
अध्यक्षाणं च निक्षेपः कण्टकानां निरूपणम् ।
दृष्टार्थे संस्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज' ॥

इति । बाढम् अस्मिन्नप्यर्थशास्त्रे धर्मशास्त्राविरुद्धो योंऽशः स उपादेयः । इतरस्तु परित्याज्यः । तदाह नारदः—

'यत्र विप्रतिपत्तिःस्याद्धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्'* ॥
( ना. स्मृ. १. ३९ )

* धर्मशास्त्रार्थशास्त्रयोर्विरोधे धर्मशास्त्रं बलवत् । धर्मशास्त्रेऽपि एकस्याः स्मृतेः स्मृत्यन्तरेण विरोधे पुरस्तादुक्तयाज्ञवल्क्यवचनेन व्यवहार-न्यायस्य बलवत्वम् । धर्मशास्त्रोक्तमपि न सर्वं ग्राह्यम् । यथा—

'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्' ।

इत्यादिना विहितो ऽपि नियोगो—

'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ ( ६४ )
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं क्वचित् ॥ ( ६५ )
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः' । ( ६६ )
(म. स्मृ. ९. ६४—६६ )

इत्यादिवचनैर्निषिद्धत्वात् लोकव्यवहारे शिष्टैरनादृतत्वान्नाचरणीयम् । तथा—

१. D. reads °स्य for °श्चा°. २. C. reads च for सं°; while D. reads इयं° for सं.

इति । धर्मशास्त्रयोर्द्वयोर्विरोधे न्यायेन निर्णेतव्यम् । तदाह याज्ञवल्क्यः—

'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः'

(या. स्मृ. २. २१)

इति । व्यवहारतो वृद्धव्यवहारात् प्रसिद्धो न्यायो बलवान् । न्यायानाश्रयणे बाधमाह बृहस्पतिः—

'केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥
चोरोऽचौरः साध्वसाधुर्जायते व्यवहारतः ।
युक्तिं विना विचारेण माण्डव्यश्चोरतां गतः ॥
असत्याः सत्यसदृशाः सत्याश्चासत्यसन्निभाः ।
दृश्यन्ते[2] भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत्' ॥

इति । न्यायस्य निर्णायकत्वमुपपादयति मनुः—

'यथानयत्यसृक्पातैर्[3]मृगस्य मृगयुः पदम् ।
नयेत्तथानुमानेन धर्मस्य नृपतिः पदम् ॥ (४४)

---

'नष्टेमृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते' ॥

इत्यादिवचनैः पुनरुद्वाहे विहितेऽपि अन्यत्र निषेधदर्शनात् शिष्टैरपरिगृहीतत्वाच्च स्त्रीपुनरुद्वाहो वर्जनीय एव । एवं मातुलकन्यापरिणयः श्रुति-स्मृत्यादिभिर्निषिद्धोऽपि शिष्टैरादृतत्वात् दाक्षिणात्यैः कर्तव्य एव भवति ।

---

१. D. reads धर्मशास्त्रार्थशास्त्रयोः for धर्मशास्त्रयोर्द्वयो°:. २. C. reads भासन्ते for दृश्यन्ते. ३. D. reads °पातकैः for °पातैः.

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषश्चेष्टितेन च' ॥ (२५)
(म. स्मृ. ८. २५-४४.)

इति । याज्ञवल्क्योऽपि—

'असाक्षिके हते चिन्हैर्युक्तिभिश्चागमेन च ।
द्रष्टव्यो व्यवहारस्तु कूटचिन्हकृताद्भयात्' ॥
(या. स्मृ. २. ३९)

इति । 'यत्तु पूर्वमुक्तं 'भूतछलानुसारित्वात् द्विगतिः' इति तत्र छलं हेयं भूतमुपादेयम् । तदाह याज्ञवल्क्यः—

'छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः' ॥
(या. स्मृ. २. १९.)

इति । निर्णये प्रमाणं साक्ष्यादिकम् । तदाह गौतमः—

'विप्रतिपत्तौ साक्षिनिमित्ता तस्य व्यवस्था' ।
(गौ. स्मृ. २७. १३)

इति । मनुरपि—

'प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक्पृथक्' ॥
(म. स्मृ. ८. ३.)

---

१. D. reads वाक्यैः for बाह्यैः. २. B. originally reads धने, but corrected reads हते. ३. C. and D. read चिन्हे for चिन्हैः. ४. B. originally reads °तु° for °यं°; while C. and D. do not read हेयं भूतमुपादेयं. ५. B. originally reads बलं, but corrected reads छलं. ६. C. reads निर्णायके for निर्णये. ७. D. reads निबन्धानि for निबद्धानि.

इति। देशाचारैः शास्त्रोक्तदिव्यादिभिश्चा[1]ष्टादशपदसंबंधीनि कार्याणि निर्णयेत्। तत्र देशाचारोऽनुकल्पः। तदाह कात्यायनः—

'तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत्।
वाक्याभावे तु सर्वेषां देशदृष्ट[2]मतं नयेत्'॥

इति। देशदृष्टस्य लक्षणमाह स एव—

'यस्य देशस्य यो धर्मः प्रवृत्तः[3] सार्वकालिकः।
श्रुति-स्मृत्यविरोधेन देशदृष्टः स उच्यते'॥

इति। तत्तद्देशीयानां मिथो विवादे तद्दे[4]शदृष्टेन निर्णयः। तदाह स एव—

'देश-पत्तन-गोष्ठेषु पुर-ग्रामेषु[5] वादिनाम्।
तेषां स्वसमयै[6]र्धर्मः शास्त्रतो[7]ऽन्येषु तैः सह'॥

इति। यत्र तद्देशीया[8]नामितरैः सह विवादः। तत्र शास्त्रतो[9] निर्णयो न तु देशदृष्टतः। लेख्यादिप्रमाणाभावे राजा स्वेच्छया निर्णयेत्। तदाह स एव—

'लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः'॥

इति। वणिगादिसमयेषु समयिभिरेव निर्णेतव्यम्। तदाह व्यासः।

---

१. C. reads °सा° for °श्चा°. २. C. reads °दृष्टमनन्तयेत्; while D. reads °दृष्टेन समयेत् for °दृष्टमतं नयेत्. ३. C. reads प्रशस्तः for प्रवृत्तः. ४. D. omits तत्. ५. B. originally substiutes °मार्गेषु for °ग्रामेषु. ६. A. and B. read स्वसमये. ७. D. reads धर्म शास्त्रतो for धर्मः शास्त्रतो. ८. D. adds तत् to तद्देशीयानाम्. ९. A. and B. read शास्त्रे यो for शास्त्रतो.

'वणिक्शिल्पि-प्रभृतिषु कृषि-रङ्गोपजीविषु ।
अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव तु कारयेत्' ॥
गुरुः स्वामी कुटुम्बी च पिता ज्येष्ठः पितामहः ।
विवादं नैव पश्येयुः स्वाधीने विषये नृणाम्' ॥

इति । निर्णयकारिणामुत्तमाधमभावमाह नारदः—

'कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः ।
प्रतिष्ठा व्यवहाराणां सर्वेषामुत्तरोत्तरम्' ॥

इति । पितामहोऽपि— (ना. स्मृ. १. ७.)

'ग्रामे दृष्टः पुरे यायात् पुरे दृष्टस्तु राजनि ।
राज्ञादृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भयम्' ॥

इति । राज्ञो नियममाह पितामहः—

'न रागेण न लोभेन न क्रोधेन ग्रसेन्नृपः ।
परैरप्रार्थितानर्थान्न चापि स्वमनीषया' ॥

इति । अस्यापवादमाह स एव—

'छलानि चाऽपराधांश्च पदानि नृपतेस्तथा ।
स्वयमेव निगृह्णीयान्नृपस्त्वावेदकैर्विना' ॥

इति । तत्र छलान्याह स एव—

---

१. C. reads अन्यैरेव न and D. तत्तैरेव तु for तज्ज्ञैरेव तु. २. D. reads कुटुम्बं for कुटुम्बी. ३. D. reads विवादानथ for विवादं नैव. ४. A. B. C. read गुर्व्येषा° for सर्वेषा°. ५. A. has marginal reading पुरं; while B. in correction पुरीं. ६. B. originally reads सुदृष्टो; while corrected कुदृष्टो. ७. B. corrected reads °र्भवेत्, C. reads °र्भवः, D. also reads as C. ८. D. reads कोपेन for क्रोधेन. ९. B. corrected reads भसे°, D. reads नये°. १०. D. reads नृपतिः for नृपतेः.

पथिभङ्गी कराक्षेपी प्राकारोपरि लङ्घकः ।
निपानस्य[1] विनाशी च तथा चायतनस्य च[2] ॥
परिखापूरकश्चैव राजच्छिद्रप्रकाशकः ।
अन्तःपुरं वासगृहं भाण्डागारं महानसम् ॥
प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते[3] ।
विण्मूत्र-श्लेष्मघातानां[4] क्षेमुकामो[5] नृपाग्रतः[6] ॥
पर्यङ्कासनबन्धश्चा[7]ऽप्यग्रस्थाननिरोधकः ।
राज्ञोतिरिक्तवेषश्च[8] प्रवृत्तःप्रविशेत्तु यः ॥
यश्चापद्वारेण प्रविशेदवेलायां[9] तथैव च ।
शय्यासने पादुके च शयनासन[10]रोहणे ॥
राजन्यासन्नशयने यस्तिष्ठति समीपतः ।
राज्ञो विद्विष्टसेवी चा[11]ऽप्यदत्तविहितासनः ॥
वस्त्राभरणयोश्चैव सुवर्णपरिधायकः ।
स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः ॥
अनियुक्तप्रभाषी च नृपाक्रोशक एव च ।
एकवासास्तथाभ्यक्तो मुक्तकेशोऽवगुंठितः[12] ॥

---

१. A. has marginal reading नृपालस्य; while B. originally reads नृपालस्य and corrected निपानस्य° २. C. substitutes वा for च. ३. D. reads निरीक्ष्यते. for निरिक्षते. ४. B. originally reads °वातानां, but corrected °घातानां. ५. B. originally reads हेतुकामः, but corrected क्षेमुकामः. ६. C.D. read नृपात्मजः for नृपाग्रतः, ७. D. reads °बन्धी चा° for °बन्धश्चा. ८. A. has marginal readings °वर्षश्च, द्विवर्षश्च, वर्षाद्यः; while B. reads the same forms in correction and D. reads °वेषैश्च विधृतश्च for °वेषश्च प्रवृत्तः प्र°. ९. C. reads °दचैत्यायां for °दवेलायां. १०. A. has marginal reading °श° for °स° in the word °नासन°; while B. in correction reads °श°. ११. C. D. read वा° for चा°. १२. A. has marginal reading °कुं°, °लुं° for °गुं° in the word ऽगुंठितः, while B. reads in correction °मुण्डितः, C. reads °लुंठितः and D. ऽगृहीतः forऽगुंठितः.

विचित्रिताङ्गः स्रग्वी च परि[1]धानविधू[2]नकः
[3]शिरःप्रच्छादनश्चैव छिद्रान्वेषणतत्परः ॥
आसङ्गी मुक्तकेशश्च पक्षि-पर्णा-ऽक्षिदर्शकः ।
दन्तोल्लेखनकश्चैव कर्ण-नासाविशोधकः ।
छलान्येतानि पञ्चाशद्भवंति नृपसन्निधौ' ॥

इति । [4]सापराधानाह नारदः—

'आज्ञालङ्घनकर्तारः स्त्रीवधो वर्णसंकरः' ।
परस्त्रीगमनं चौर्यं गर्भश्चैव पतिंविना ॥
वाक्पारुष्यमवाच्यं यद्दण्डपारुष्यमेव च ।
गर्भस्य पातनं चैवेत्यपराधा दशैव हि' ॥

इति । विवादमन्तरेणापि दण्डनहेतुत्वादेतेषामपराधत्वम् ।
अतएव संवर्त्तः—

'[5]आसेधं [6]प्रतिभङ्गं च यश्च गर्भः [7]पतिं विना ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
कन्यापहारकं पापं विप्रं च पतितं तथा ।
परार्थवादसंयुक्तं स्वयं राजा विचारयेत् ॥
षड्भागकालं शुल्कार्थे मार्गभेदकमेव च ।
स्वराष्ट्रे चौर्यभीतिं च परदाराभिमर्शनम् ॥

---

१. A. has marginal reading °काल° for °धान°; while B. reads in correction °बाल° and C. reads °वाल° for °धान°. २. A. substitutes °म° for °न° in the margin; while B. has corrected reading and C. reads originally °म° for °न.° ३. These three lines are omitted in C. and D. ४. C. and D. read अपराधा° for सापराधा°. ५. C. and D. read आसेवं for आसेधं. ६. A. has marginal reading पथि°; while B. in correction and C. D. as usual read पवि° for प्रति°. ७. C. reads पतन्ति वा for पतिं विना.

गो-ब्राह्मणनिहंतारं सस्यानां चैव घातकम्।
दशैतानपराधांश्च स्वयं राजा विचारयेत्' ॥

इति। पादान्याह पितामहः—

'उत्कृती[1] सस्यघाती च अग्निदश्च[2] तथैव च।
विवेसकः[3] कुमार्याश्च निधानस्योपगोपकः ॥
सेतु-कण्टकभेत्तारः क्षेत्रसंसारकस्तथा।
आरामछन्दसश्चैव गरदश्च तथैव च ॥
पटहा घोषणाछादी द्रव्यमस्वामिकं च यत्।
राजावलीढद्रव्यं च यश्चैवांगविनाशनम् ॥
द्वाविंशति[4]पदान्याहुर्नृपज्ञेयानि पण्डिताः' ।

इति। यत्र छलादीनि राजा स्वयं द्रष्टुमशक्तः तत्रस्तोभकात् सूचकाच्च बोद्धव्यम्[5]। तयोः स्वरूपमाह कात्यायनः—

'शास्त्रेण निन्दितं त्वर्थं मुख्यश्चार्थः[6] प्रचोदितः ॥
आवेदयति यः पूर्वं स्तोभकः स उदाहृतः ॥
नृपेणैव नियुक्तो यः परदोषमवेक्षितुम्[7]।
नृपस्य समयं[8] ज्ञात्वा सूचकः स उदाहृतः' ॥

इति। शास्त्रेण निन्दितं छलादिकमर्थम्। मुख्यो धनलाभश्च प्रधानः। राज्ञा शास्त्रादिपर्यालोचनपुरःसरमेव कार्यं कर्तव्यम्। तदाह हारीतः—

---

१. B. originally reads उत्कृष्टसस्य° for उत्कृती सस्य°; while A. has marginal reading निकृत्तवित्त°. २. A. in margin and B. originally read °इन्धः for °दश्च. ३. In C. and D. these three lines are not found and is this word विवेसकः; A. and B. one in margin and one in correction but subsititute °श° for °स°. ४. C. reads °त्रिंशति° for °विंशति° ५. C. reads द्रष्टव्यम् for बोद्धव्यम्. ६. A. in margin reads मुधाख्या°, B. originally and D. मुख्यो राज्ञा for मुख्यश्चार्थः. ७. B. originally reads °मपेक्षितुम् for °मवेक्षितुम्. ८. D. reads सूचयेत् for समयं.

'शास्त्राणि वर्णधर्मांस्तु प्रकृतीनां च भूपतिः ।
व्यवहारस्वरूपं च ज्ञात्वा कार्यं समाचरेत्' ॥

इति । प्रकृतयः पितामहेन दर्शिताः—

'रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तकश्च विज्ञेयो म्लेच्छो भिल्लस्तथैव च ॥
[१]मेथिकस्त्रिरवण्यालः हस्तलक्ष-दुघट्टिकाः ।
कोसेदिका भारुपदा मातंगाः पदगोपकाः ॥
एताः प्रकृतयः प्रोक्ता अष्टादशमनीषिभिः ।
वर्णानामाश्रमाणां च सर्वदा तु बहिः स्थिताः' ॥

इति । मनुश्च [२]जात्यादि समीक्षणीयमित्याह—

'[३]जाति-जानपदान् धर्मान् श्रेणिधर्मांश्च शाश्वतान् ।
समीक्ष्य कुलधर्मांश्च [४]सवर्णे प्रतिपादयेत्' ॥

इति । [५]उन्मार्गवर्त्तिनो [६]बलात्स्वमार्गे स्थापयेदित्याह याज्ञवल्क्यः —

'कुलानि प्रकृतीश्चैव श्रेणिर्जानपदानपि ।
स्वधर्माच्चलितान् [७]राजा विनीय स्थापयेत्पथि' ॥

इति । कार्यदर्शनप्रकारमाह नारदः—

---

१. These two lines are omitted in B. and C. २. B. in correction reads ज्ञात्यादि and C. originally जात्यादि. ३. C. reads ज्ञाति° for जाति°. ४. A. has marginal reading स्वे for स°; while B. in correction, and C. and D. originally read स्ववर्णे for सवर्णे. ५. B. reads उन्माद° for उन्मार्ग°; C. and D. also the same. ६. C. reads बालान् for बलात्; while D. reads कुलादिन्. ७. A. and B. originally read °चरितान् for °चलितान्.

'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः।
समाहितमतिः पश्येत् व्यवहारमनुक्रमात्॥
आगमः प्रथमः कार्यो व्यवहारपदं ततः।
विचारो निर्णयश्चेति दर्शनं स्याच्चतुर्विधम्'॥
(ना. स्मृ. १. ३५–३६)

इति। आगमोऽर्थिवचनश्रवणं तदादौ कर्तव्यम्। ततस्तद्वचनमृणादानाद्यन्यतमस्मिन्पदेऽन्तर्भाव्यम्। ततः प्रतिज्ञोत्तरप्रमाणानां विचारः। ततः प्रमाणतो जयावधारणम्।

इति व्यवहारदर्शनविधिः।

अथासेधादिविधिः।

तत्र नारदः—

'वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम्'॥
(ना. स्मृ. १. ४७)

इति। प्रथमं तावदर्थी प्रत्यर्थिनोऽग्रे त्वयैतावन्मह्यं देयमित्यादिकं कार्यं ब्रूयात्। तत्र यदि तदुक्तमनभ्युपगम्योत्क्रान्तुमिच्छेत् तदा स्वकार्यपर्यंतं राजाज्ञया तं निरुंध्यात्। आसेधस्य भेदानाह स एव—

'स्थानासेधः कालकृतः प्रवासात् कर्मणस्तथा।
चतुर्विधः स्यादासेधस्तमासिद्धो न लङ्घयेत्'॥
(ना. स्मृ. १. ४८)

१. C. and D. read °व्ये° in the word वक्तव्यार्थे. २. D. reads °मासेधं° for °मासिद्धो.

इति। अस्मात्स्थानात्त्वया न चलितव्यमिति स्थानासेधः मदीयद्रव्यप्रदाने दिनमेतन्नोल्लङ्घनीयमिति कालासेधः। अदत्त्वा ग्रामान्तरं नगन्तव्यमिति प्रवासासेधः। अदत्त्वा न सन्ध्यावन्दनं कार्यमिति कर्मासेधः। सन्ध्यावन्दनादिवदिन्द्रियनिरोधो नासेधार्हः। तदाह कात्यायनः—

'यस्त्विन्द्रियनिरोधेन [१]व्यवहारोत्सवादिभिः।
आसेधयेदनासेध्यैः[२] स दण्ड्यो न त्वतिक्रमात्'॥

इति। इन्द्रियनिरोधवद्विषमदेशोऽपि नासेधार्ह इत्याह नारदः—

'नदीसन्तार-कान्तारदुर्देशोपप्लवादिषु।
आसिद्धस्तं परासेधमुत्क्रामन् नापराध्नुयात्'॥
(ना. स्मृ. १.४९)

इति। आसेध्यासेधकयोः[३] स्वकालोल्लङ्घने दण्डमाह स एव—

'आसेधकाल आसिद्ध आसेधं योऽतिवर्तते।
स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग्भवेत्'॥
(ना. स्मृ १.५१)

इति। अन्यथा कुर्वन्नयोग्ये निशीथादिकाले तमासेधयन्। अनासेध्यानाह कात्यायनः—

'वृक्ष-पर्वतमारूढा हस्त्यश्व-रथ-नौगताः[४]।
विषमस्थाश्च ते सर्वे नासेध्याः कार्यसाधकैः[५]॥

---

१. C. reads व्यासेधात् कुशलादिभिः; while D. reads व्याहरेत् कुशलादिभिः for व्यवहारोत्सवादिभिः. २. B. originally reads °ध्यैः while correction °ध्यैः, C. and D. read for the same. ३. D. reads तत्° for स्व°. ४. A. in marginal reading and in correction reads °मताः for °गताः; while C. reads the same. ५. B. originally reads °सिद्धिदैः, but corrected °साधकैः. A. also has marginal reading °सिद्ध° for °साध°.

व्याध्यार्ता[1] व्यसनस्थाश्च यजमानास्तथैव च[2] ।
अनुत्तीर्णाश्च नासेध्या मत्तोन्मत्तजडास्तथा ॥
न कर्षको बीजकाले सेनाकाले च सैनिकाः ।
प्रतिज्ञाय प्रयाताश्च कृतकालश्च नान्तरा ॥
उद्युक्तः कर्षकः सस्ये वापस्यागमने सदा[3] ।
आरम्भात्[4] सङ्ग्रहं यावत्तत्कालं न विवादयेत्' ॥

इति । बृहस्पतिरपि–

'सत्रोद्वाहोद्यतो[5] रोगी शोकार्तोन्मत्त[6]-बालकाः ।
मत्तो वृद्धोऽनुयुक्तश्च[7] नृपकार्योद्यतो व्रती ॥
आसन्ने सैनिकः सङ्ग्रये कर्षको वापसङ्ग्रहे[8] ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च' ॥

इति । नारदोऽपि–

'निर्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन[9] राजकार्योद्यतस्तथा ॥
गवां प्रचारे गोपालः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्काल आयुधीयाश्च[10] विग्रहे ॥

१. A. in marginal reading and B. in correction read से° for व्या° in the word व्याध्यार्त्ताः. २. C. and D. subsitute ऽथ for च. ३. A. in margin and B. in correction read य° for स° in the word सदा. C. and D. also read the same. ४. D. reads आरम्भसंग्रहं for आरम्भात् संग्रहं. ५. A. in margin, B. in correction substitute °न्नो° for °त्रो°; while C. reads originally. ६. C. reads मत्त° for °न्मत्त° and D. °मृत° for the same. ७. A. in margin, B. in correction, C. and D. as usual subsitute ऽनि° for ऽनु°. ८. D. reads कर्षकश्चाय° for कर्षको वाप°. ९. C. reads सेना for ऽन्येन. १०. A. in margin and B. in origin read °स्त्र° for °श्च; while C. and D. as usual read °श्च, but B. corrected reads °स्त्र°.

अप्राप्तव्यवहारश्च दूतो दानोन्मुखो[1] व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः' ॥

(ना. स्मृ. १. ६२--६४)

इति। कदा तर्हि द्रव्यं दापनीयमित्याकांक्षायां बृहस्पतिराह—

'वणिग्विक्रीतपण्यस्तु सस्ये जाते कृषीवलः ।
सत्रोद्यताश्चैव तथा दापनीयाः कृत क्रियाः' ॥

इति। यद्यासिद्धो नागच्छेत्तदा राज्ञा समानेयः। तदाह बृहस्पतिः—

'यस्याभियोगं[2] कुरुते सत्येनाशङ्कयाऽथ वा ।
तमेवानाययेद्राजा[3] मुद्रया पुरुषेण वा' ॥

इति। नारदोऽपि—

'देशं कालञ्च विज्ञाय कार्याणाञ्च बलाबलम् ।
अकल्पादीनपि शनैर्यानै[4]राह्वानयेन्नृपः' ॥

इति। आह्वानानर्हानाह[5] हारीतः

'अकल्प-बाल-स्थविर-विषमस्थ-क्रियाकुलान् ।
कार्यातिपाति-व्यसनि-नृपकार्योत्सवाकुलान् ॥
मत्तोन्मत्तप्रमत्तांश्च[6] स्वजातिप्रभुक्तां स्त्रियम् ।
धर्मोत्सुकान्[7] जडानार्तभृत्यान् नाह्वानयेन्नृपः' ॥

इति। कात्यायनोऽपि—

---

१. A. in margin, B. in origin read °इक्तो for °न्मुखो; while B. in correction reads °त्सुक्तो, C. and D. as usual, read °न्मुखो. २. D. reads यत्रा° for यस्या°. ३. Only C. reads तमेनं दीपयेत् for तमेवानाययेत्. ४. D. reads तथा शनः for शनैर्यानैः. ५. A. in margin and B. originally read आव्हानानर्थान् instead of आव्हानानर्हान्; while C. reads आहूतानर्हानाह. ६. D. reads this line thus जडान्मत्तप्रमत्तांश्च स्वजातिविमुखां स्त्रियम् and C. रोगोन्मत्तप्रमत्तांश्च जातित्यक्तां स्त्रियं तथा and E. मत्तोन्मत्तप्रमत्तार्तभृत्यान् नाव्हानयेन्नृपः. ७. This line is found only in D.

'धर्मोत्सुकानभ्युदये रोगिणो थ जडोनपि ।
अस्वस्थमत्तोन्मत्तार्त-स्त्रियो नाव्हाययेन्नृपः ॥
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
स्वजातिप्रभुक्तां चैव तथा नाव्हानयेन्नृपः' ॥

इति । स्वजातिप्रभुक्ता तु मरीचिना निरुक्ता—

'सर्ववर्णोत्तमा कन्या सा जातिप्रभुक्ता स्मृता ।
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ॥
निष्कुला याश्च पतितास्तासामाव्हानमिष्यते' ।

इति । दुष्टस्य दण्डमाह बृहस्पतिः—

'आहूतो यस्तु नागच्छेद्दर्पाद्बन्धुबलान्वितः ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत्' ॥

इति । कात्यायनोऽपि—

'आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥
हीने कर्मणि पञ्चाशन्मध्यमे तु शतावरः ।
गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः' ॥

इति । आपन्नस्याऽनागमनेऽपि दण्डो नेत्याह व्यासः—

'परानीकहते देशे दुर्भिक्षे व्याधिपीडिते ।
कुर्वीत पुनराव्हानं दण्डं न परिकल्पयेत्' ॥

इति ।

इत्यासेधविधिः ।

---

१. A. in margin and B. in correction substitute °ना° for °डा° in जडानपि. २. This is mentioned only in D.; ३. A. B. C. read ता जातिप्रभुक्ता स्मृताः; while in the preceding half of this line, D. reads nominative case instead of objective case. ४. C. and D. read दृप्तस्य for दुष्टस्य

अथ दर्शनोपक्रमः ।

तत्र मनुः—

‘ धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत्’ ॥

( म. स्मृ. ८. २३. )

इति । आरब्धुः[1] कर्तव्यमाह कात्यायनः—

‘ काले कार्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव’ ॥

इति ।

केन कस्मिन्कथं[2] कस्मात्पृच्छेदेनं[3] सभागतत् !

इति । बृहस्पतिरपि—

‘ आगतानां विवदतामसकृद्वादिनां नृपः ।
वादान्पश्येन्नात्मकृतान्न चा ध्यक्षनिवेदितान् ॥
पीडितः स्वयमायातः शस्त्रेणार्थी यदा भवेत्
प्राड्विवाकस्तु[4] तं पृच्छेत्पुरुषो वा शनैः शनैः’ ॥

इति । पृष्टश्च कार्यं यथावदावेदयेदित्याह याज्ञवल्क्यः—

‘ स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्’ ॥

( या. स्मृ. २. ५. )

---

१. D. reads आरभ्य for आरब्धुः. २. A. in margin and B. in correction read कदा for कथं. ३. D. reads °देवं for °देनं. in B. C. D. mention this line, But not in A.; ४. A. in margin and B. in correction substitute °स्थि° for °स्तु.

इति । यदि केनचिन्निमित्तेन स नावेदयेत् । तदा स व्यवहारो न[1] बलात्कारयितव्य इत्यभिप्रेत्य चेदित्युक्तम् । आवेदनकाले सख्या[2]दयो वर्जनीया इत्याह उशनाः—

'ससखो[3]ऽनुत्तरीयो* वा मुक्तकच्छः[4] सहासनः ।
वामहस्तेन वा स्रग्वी वदेद्दण्डमवाप्नुयात्' ॥

इति । अर्थिनः प्रतिनिधिमभ्युपगच्छति †कात्यायनः—

'अर्थिना सन्नियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जय-पराजयौ' ॥

(ना. स्मृ. २. २२.)

इति । अन्तरेणापि नियोगं पित्रादयो विवादं कुर्युरित्याह पितामहः—

'पिता माता[6] सुहृद्वापि बन्धुः सम्बन्धिनोऽपि[5] वा ।
यदि कुर्युरुपस्थानं वादं तत्र प्रवर्तयेत् ॥

*सखा मित्रं तेन सहितः ससखः । अनुत्तरीयः प्रावरणरहितः । सहासनः प्राड्विवाक-सभ्यादीनामासने तैः सह स्थितः । यद्वा हासो हास्यं तेन सहितः । वामहस्तमग्रे कृत्वा यः वदति इत्यनेन सभ्यादीनामवज्ञाव्यञ्जनं गम्यते । एते सर्वेऽपि दण्ड्या एव ।

†सर्वेष्वप्यादर्श पुस्तकेषु अधस्तनं अर्थिनेत्यादि वाक्यं कात्यायनीयत्वेनावतारितम् । उपलभ्यते चैतन्नारदस्मृतौ । कात्यायनव्यवहारस्त्वदृष्टाश्रुतपूर्वः । अतो न निश्चीयते इदं कात्यायनीयं वानवेति । विज्ञानेश्वरेण तु ( व्य. ६ श्लोकव्याख्यायां ) अन्यतरनामानिर्देशमन्तरा ' इति सामान्यतयैवोद्धृतम् ।

१. D. does not read न. २. A. in margin and B. originally read शख्या° for सख्या°. ३. A. and B. read स्वशस्त्रो for ससखो. ४. A. in margin and B. in correction place °शस्त्रः for °कच्छः. ५. A. in margin and B. originally substitute द्वय° for अ.° ६. A. in margin and B. originally read भ्राता for माता.

'यो ऽनधीत्य* द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' ॥
(म. स्मृ. २. १६८ व. स्मृ. ३. २)
'अकुर्वन्[†] विहितं कर्म निन्दितं च समाचरन् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति' ॥

---

*अन्यत्र अर्थशास्त्रादौ । स जीवन्नेव सान्वयः पुत्र-पौत्रादिसहितः शूद्रत्वं गच्छति । उशनसा तु—
'यो ऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः ।
स वै मूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः' ॥
( उ. स्मृ. ३. ८१ )
इति असम्भाष्यत्वमुक्त्वा—
'यो ऽधीत्य विधिवद्वेदं वेदान्तं न विचारयेत् ।
स सान्वयः शूद्रकल्पः स पाद्यं न प्रपद्यते' ॥
( उ. स्मृ. ३. ८३ )
इति वेदानधीत्यापि वेदान्तविचाराकरणे शूद्रकल्पत्वमुक्तम् । वेदमनधीत्यापि वेदाङ्गस्मृत्याद्यध्ययने न दोषः । एतदेवाभिप्रेत्य शङ्ख-लिखितावाहतुः—'न वेदमनधीत्यान्यां विद्यामधीयीत, अन्यत्र वेदाङ्ग-स्मृतिभ्यः' इति।
† अस्य पूर्वार्धं याज्ञवल्क्यस्मृतौ—
'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
( अ. ३ श्लो. २१९ )
इति । उत्तरार्धं मनुस्मृतौ—
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः' ।
( अ. ११ श्लो. ४४ )
इति च दृश्यते । तस्मात् पूर्वार्धं मानवं उत्तरार्धं याज्ञवल्कीयमिव प्रतिभाति तथापि आनन्दगिरिस्वामिभिः तैत्तिरीयोपनिषद्भाष्यस्य वार्तिकस्य च टीकायां समग्रत्वेनैव सङ्गृहीतं वर्तते । तत्र तु 'प्रसक्तश्चेन्द्रियार्थेषु' इति पाठः ।

इति । मैवम् । एतानि हि वचनानि नित्यकर्माननुष्ठायिनः आलस्यनिमित्तं पूर्वसञ्चितं दुरितं यत् तत्सद्भावं सूचयन्ति । एतच्च तैत्तिरीयोपनिषद्व्याख्याने भाष्यकार-वार्त्तिककाराभ्यां* प्रतिपादितम् । यदि अकरणं प्रत्यवायस्योत्पादकं यदि वा सूचकं उभयथा अपि नित्यकर्मानुष्ठानेन प्रत्यवायस्य प्रागभावप्रतिपालनं प्रध्वंसाभावोत्पादनं च सम्पद्यते । दुरितप्रध्वंसित्वं च त्रिसन्ध्यमनुष्ठीयमानेषु—'सूर्यश्च' (म. ना. उ. १४. ४.) 'आपः पुनन्तु' (म. ना. उ. १४. २.) 'अग्निश्च' (म. ना. उ. १४. ३.) इति मन्त्रेषु विस्पष्टमवभासते । एवं च सति उपभोग्यफलरहितानां नित्यकर्मणां अभ्युदयहेतुत्वं दुरापम्—इति ।

* ननु—यथा निषिद्धेष्वर्थवादावगतप्रत्यवायपरिहारार्थतयैव पुरुषार्थत्वं तथा विहितेष्वप्यर्थवादावगताकरणजन्यप्रत्यवायपरिहारार्थता कस्मान्न स्यात्?—इति चेत् । मैवम् । नहि सर्वत्र अग्निहोत्रादिषु तादृग्विधा अर्थवादाः न्ते । न च 'विहितस्याननुष्ठानान्नरः पतनमृच्छति' इतीयं स्मृतिरेव [illegible]शेषस्थानीयेति वक्तुं शक्यम् । नहि वाक्यान्तरप्रमीते कार्ये वाक्यान्तरेणार्थवादः सम्भवति । भवतु वा कथञ्चित् एकवाक्यतया अर्थवादः । तथापि न अभावरूपविहिताकरणं कार्यान्तरं जनयितुं शक्नोति ।

† भाष्यं करोतीति भाष्यकारः श्रीभारतीतीर्थः । भाष्यलक्षणं यथा—

'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' ॥

‡ । वार्त्तिकं करोतीति वार्त्तिककारः सुरेश्वराचार्यः । वार्त्तिकलक्षणं यथा—

'उक्ता-ऽनुक्त-दुरुक्तार्थव्यक्तिकारि तु वार्त्तिकम्' ॥

। तैत्तिरीयोपनिषद्भाष्ये वार्त्तिके च [illegible] न [illegible] इति [illegible]स्तरेण प्रपञ्चितम् । तत्तु तत्रैवानुसन्धेयम् ।

१. A. and I. omit [illegible] [illegible] A. [illegible] and read परिपालनं, and D. [illegible] for [illegible]. [illegible] A. reads भोग्य- for उपभोग्य-. [illegible] A. and I. insert [illegible] between [illegible] and तुत्वं. ६. For दुरापम् A. B. C. D. F. and I. have दूरापेतम्.

अत्रोच्यते । [1]अस्तु [2]वा प्रत्यवायविरोधित्वम् । [3]नैतावता फला-भावः । मन्त्रलिङ्गेन श्रुति-स्मृतिवाक्याभ्यां च तत्फलावगमात् । 'मयि वर्चो बलमोजो निधत्त'—इति मन्त्रलिङ्गम् । छान्दोग्य-वाक्यं च आश्रमत्रयस्य लोकहेतुतां चतुर्थाश्रमस्य मोक्ष-हेतुतां दर्शयति । 'त्रयो *धर्मस्कन्धाः यज्ञो ऽध्ययनं दान-मिति । प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृती-यो ऽत्यन्तमात्मानमाचार्यकुले ऽवसादयन् । सर्व एते पुण्यलोका भवन्ति ब्रह्मसँस्थो ऽमृतत्वमेति' (छां. उ. २. २३. १) इति । एतस्य च वाक्यस्य आश्रमपरत्वं-'परामर्शं जैमिनिः' (शा. सू. ३. ४. १८) †इत्यादिभिर्व्याससूत्रैः प्रतिपादितम् । स्मृतिवाक्यं चैतत् । 'त-

---

* ओङ्कारस्य उपासनविध्यर्थं 'त्रयो धर्मस्कन्धा' इत्यारब्धम् । धर्म-स्कन्धाः धर्मप्रविभागा इत्यर्थः । यज्ञः अग्निहोत्रादिः, अध्ययनं नियमपू-र्वकं वेदाभ्यासः, दानं भिक्षमाणेभ्यो यथाशक्ति द्रव्यसंविभागः, इत्येषः प्रथमो धर्मस्कन्धः । एतेन गृहस्थाश्रमो ऽभिधीयते । कृच्छ्र-चान्द्रायणा-दितपकर्ता तापसः वानप्रस्थो वा द्वितीयो धर्मस्कन्धः । ब्रह्मचारी सन् आचार्यकुलवासी अत्यन्तं गुरुगृहे आत्मानं क्षपयन् नैष्ठिकः तृतीयो धर्मस्कन्धः । त्रयो ऽप्येते आश्रमिणः पुण्यो लोको येषां ते पुण्यलोकाः भवन्ति । अवशिष्टस्तु परिव्राट् ब्रह्मणि सम्यक् स्थितः अमृतत्वं मोक्षं प्रा-प्नोति इति श्रुत्यर्थः ।

† 'त्रयो धर्मस्कन्धाः' इत्यादयो ये शब्दा ऊर्ध्वरेतसाश्रमाणां सद्भा-वायोदाहृताः न ते तत्प्रतिपादनाय प्रभवन्ति । यतः एषु शब्देषु आश्रमान्तराणां परामर्शं जैमिनिराचार्यो मन्यते । न विधिम् । न ह्यत्र

---

१. D. omits the whole of the following:— अस्तु वा प्रत्यवायविरोधित्वम् । नैतावता फलाभावः । मन्त्रलिङ्गेन श्रुति-स्मृतिवाक्याभ्यां च तत्फलावगमात्. २. I. omits वा. ३. B. C. and F. read न तावता for नैतावता. ४. I. adopts तत्तत्. ५. A. omits च. ६. A. has सूत्रे for सूत्रैः.

यथा आम्रे फलार्थे निमित्ते अथायमर्थ इत्यनूद्यते। एवं धर्मं चर्यमाणमर्था अनूद्यन्ते'—इति। इदं च वाक्यं नित्यकर्मविषयत्वेन वार्तिके विश्वरूपाचार्य उदाजहार—

'आम्रे फलार्थे' इत्यादि ह्यापस्तम्बस्मृतेर्वचः।
फलवत्त्वं समाचष्टे नित्यानामपि कर्मणाम्' ॥
(बृ. उ. भा. वा. १. १. १७)

इति। तथा च मनुः—

"'वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्' ॥
(म. स्मृ. ४. १४)

---

लिङादीनामन्यतमश्चोदनाशब्दो ऽस्ति। यतो धर्मस्कन्धत्वेन त्रीनाश्रमानुदाहृत्य 'सर्व एते' इत्यनेन परामर्शपूर्वकं आश्रमाणामनात्यन्तिकफलत्वं सङ्कीर्त्य आत्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते इति सूत्रार्थः।

* न केवलं वेदोदितमेव वेदोक्तं अपि तु स्मृतीनां वेदमूलत्वात् स्मार्तमपि वेदोक्तमेव। स्वकं स्वाश्रमोक्तम्। परमां गतिं मोक्षलक्षणां प्राप्नोति। नित्यकर्मानुष्ठानात् पापक्षये सति निष्पापान्तःकरणेन ब्रह्मसाक्षात्कारान्मोक्षावाप्तेः।

'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः'।

इति भारते मोक्षधर्मोक्तेः।

---

१. We read with A. नित्यकर्मविषयत्वेन for which all others have only नित्यकर्मत्वेन. २. For आम्रे फलार्थे B. C. F. and H. substitute आम्रे निमित्त; while G. E. and the text of Brihadâranyaka vârtika read आम्रे निमित्त. ३. A. reads कर्मणामपि for अपि कर्मणाम्.

इति । कूर्मपुराणे ऽपि-

'यथाशक्ति चरेत्कर्म निन्दितानि विवर्जयेत् ।
विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् ॥
गृहस्थो मुच्यते बन्धात् नात्र कार्या विचारणा' ।
( कू. पु. १. २. १९. २८-२९ )

इति । ननु-अस्त्वेवम् । अभ्युदयहेतुत्वं तु न सम्भवति। प्रमाणाभावात् । प्रत्युत श्रुति-स्मृतिभ्यां तन्निषिद्ध्यते—

'न कर्मणा न प्रजया धनेन'-
(म. ना. उ. १०. ५; कै. उ. २)

इति श्रुतिः ।

'ज्ञानादेव तु कैवल्यम्' ।

इति स्मृतिः । मैवम् । परमात्मप्रकरणे निःश्रेयसहेतुवेदनेच्छासाधनत्वेन यज्ञादीनां विधानात् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । यज्ञेन दानेन'-इति श्रुतेः । निषेधस्तु साक्षान्निःश्रेयससाधनत्वं गोचरयिष्यति । तस्मात् न मुक्तानां अग्न्याधानादिकर्मापेक्षा ऽस्ति । वेदनोत्पत्तौ सा विद्यते । एतच्च उभयं-*'अत एव चाग्नीन्धनाद्यनपेक्षा' (शा. सू. ३

---

* 'पुरुषार्थो ऽतःशब्दात् ( शा. सू. ३ । ४ । १ ) इत्येतत्सूत्रं व्यवहितमपि अत्र परामृश्यते । 'अत एव च' विद्यायाः पुरुषार्थहेतुत्वात् । अग्नीन्धनादीनि आश्रमकर्माणि विद्यया स्वार्थसिद्धौ नोपक्षितव्यानि इति सूत्रार्थः ।

---

१. All but A. read मुक्तौ for मुक्तानाम्.

४. २५)* 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्रा. सू. ३. ४. २६) इत्याभ्यामधिकरणाभ्यां निर्णीतम्। तथा च कर्मणां परम्परया मोक्षहेतुत्वं वायवीयसंहितायामभिहितम्–

'कर्मातिशयमासाद्य पशोः पाशपरिक्षयः।
एवं प्रक्षीणपापस्य बहुभिर्जन्मभिः क्रमात्॥ (६९)
भवेद्विषयवैराग्यं वैराग्याद्भावशोधनम्।
भावशुद्ध्युपपन्नस्य शिवज्ञानसमन्वयः॥ (७०)
ज्ञान-ध्यानाभियुक्तस्य पुंसो योगः प्रवर्त्तते।
योगेन तु परा भक्तिः प्रसादस्तदनन्तरम्॥ (७५)
प्रसादान्मुच्यते जन्तुर्मुक्तः शिवसमो भवेत्'। (७६)
(शि. पु. ५. १. २. ६९-७६)

*उक्तसूत्रेण आश्रमकर्मणामत्यन्तमेवानपेक्षायां प्राप्तायामुच्यते। सपेक्षेति। विद्या सर्वाण्याश्रमकर्माणि अपेक्षते। न अत्यन्तमनपेक्षा। द्या उत्पन्ना सति फलसिद्धिं प्रति न किञ्चिदन्यदपेक्षते तथापि स्वोत्पत्ति ति तु आश्रमकर्मादिकमपेक्षत्येव। एतदेवाह श्रुतिः—

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति।
यज्ञेन दानेन तपसाऽनाशकेन'॥
(बृ. उ. ४. ४. २२.)

ते।

१. A. reads वायुसंहितायाम् for वायवीयसंहितायाम्. २. In the text of Shivapuráṇa धर्मा-. ३. Here we take our reading from A. though all others read पाप- for पाश-. In Shivapuráṇa we find पाप. The former of these is not incorrect in its own way, but this verse comes from the philosophy of the Páshupatas and the words पशु and पाश are technical ones in that philosophy. ४. In Shivapuráṇa we find different reading for this verse as:–साम्बे सर्वेश्वरे भक्तिर्ज्ञानपूर्वा प्रजायते। तानुगुणमीशस्य प्रसादो व्यतिरिच्यते॥७०॥. ५. A. and I. read ज्ञानध्यानमियु-स्य for ज्ञान-ध्यानाभियुक्तस्य. ६. H. alone reads -स्तदनन्तरः for -स्तदनन्तरम्.

इति । ननु–प्रत्यवायपरिहाराय पुण्यलोकप्राप्तये ब्रह्म-वेदनाय च प्रतिदिनं नित्यकर्मणस्त्रिः[1]प्रयोगः प्राप्तः। तन्न[2]। खादिरवत् सकृत्प्रयुक्तस्यैव वचनसंयोगभेदेन फलाऽभेदोपपत्तेः।

'खादिरो यूपो भवति'। ( तै. ब्रा. २. ४. २४. ) –इति क्रत्वर्थं वचनम् । 'खादिरं वीर्यकामस्य यूपं कुर्वीत' –इति वचनं पुरुषार्थम् । तदेतत् वचनद्वयं एकस्यैव खादिरस्य प्रयोजनद्वैविध्ये हेतुः । 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' (पू. मी. ४. ४. ३१) इति जैमिनिसूत्रात् । एवमत्रापि पूर्वो-दाहृतवचनत्रयबलात् प्रयोजनत्रैविध्ये ऽपि सकृदेव प्रयोगः । तच्च 'विहितत्वाच्चाश्रमकर्मापि' (शा. सू. ३. ४. ३२) –इत्य-स्मिन्नधिकरणे निर्णीतम् । न च नित्यस्यापि फलवत्त्वे नित्य-काम्ययोर्भेदाभावः–इति शङ्कनीयम् । करणे फलसाम्ये ऽपि अकरणे प्रत्यवाय-तदभावाभ्यां तद्भेदात् । न खलु आयुष्काम-वृष्टिकामेष्ट्याद्यकरणे कश्चित् प्रत्यवायः श्रूयते। एष एव नित्यन्यायो[6] नैमित्तिके ऽप्यवगन्तव्यः । 'स्कन्ने

* आयुष्कामेष्टिः आश्वलायनश्रौतसूत्रे 'आयुष्कामेष्ट्यां' ( २. १०. १ इत्यत्र द्रष्टव्या। वृष्टिकामेष्टिरपि तत्रैव 'वृष्टिकामेष्टिः करीरी' (२. १३. १ इत्यत्र द्रष्टव्या । 'कारीर्या वृष्टिकामो यजेत' इत्यादिना चास्य क्रत्वर्थत्वम्

१. H. has -स्त्रिधा प्रयोगः for -स्त्रिः प्रयोगः. २. For तन्न B. C. and H. read न simply, and E. omits the whole तन्न ; while G. reads च for it. ३. All except A. omit एव. ४. A. omits the word खादि ५. All but A. and I. read करणे ऽतिशयसाम्येऽपि for करणे फलसाम्ये ऽपि ; which is the reading of A. and I. ६. G. reads नित्य-काम्ययोर्नित्यन्यायो.

जुहोति । भिन्ने जुहोति' इत्यादि अनियतवेदवाक्याधिकारिविशेषणोपेतं नैमित्तिकम्* । नित्यवत् काम्यस्यापि विहितत्वेन शुद्धिहेतुत्वात् मोक्षसाधनत्वं—इति चेत् । न । राग†प्राधान्यात् । शुद्धिस्तु उपसर्जनत्वेन रागविषयं भोगं सम्पाद्योपक्षीयते । अत एव गीतायां भगवता मुमुक्षोरर्जुनस्य फलासक्तिर्निषिद्धा—

'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥
(भ. गी. २. ४८)

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूः - - - - - - -' ॥
(भ. गी. २. ४७)

---

* केचित्तु—'निमित्तं पर्वण्यादिकमनुरुध्य प्रवृत्तं नैमित्तिकं' इत्याहुः । अनियतवेदवाक्याधिकारिविशेषणोपेतत्वे हि चैत्यवन्दनादिकस्यापि नैमित्तिकत्वं भवेदिति तेषामाशयः ।

† 'राग' शब्देनात्र विषयसेवनाभिलाष एव ग्राह्यः । नेच्छामात्रम् । 'सुखानुशयी रागः' (२.७) इति योगसूत्रात् 'सुखाद्रागः' (६.२.१०) इति वैशेषिकसूत्राच्च विषयगोचराभिलाषस्यैव रागत्वाभिधानात् ।

---

१. For -वेदवाक्याधिकारि- A. and I. read -भेदनाधिकार्य-; B. C. E. and F. read वेदवाद्यधिकारि-. २. A. and I. read रागविषयभोगं for रागविषयं भोगं. ३. For सम्पाद्योपक्षीयते E. and G. read सम्पाद्योपजायते. ४. All but A. read कथञ्चन for कदाचन.

इत्यादिना। नित्यकर्मणि तु बुद्धिशुद्धिः प्रधानम्। फलमुपसर्जनम्। अत एव भुज्यमानेनापि फलेन तदनित्यत्व-सातिशायत्वदोषदर्शनरूपो विवेको न प्रतिबध्यते। तदुक्तं वार्तिककारेण—

'नित्येषु* शुद्धेः प्राधान्यात् भोगो ऽप्यप्रतिबन्धनः।
भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः'॥
(बृ. उ. भा. वा. १. १. ६०८)

इति। नित्यं च कर्म द्विविधम्। संस्कारकं विविदिषाजनकञ्च। विहितत्वमात्रबुद्ध्या क्रियमाणं संस्कारकम्। तथा च स्मर्यते। 'यस्यैते ऽष्टाचत्वारिंशत् संस्काराः स ब्रह्मणः सायुज्यं सलोकतां गच्छति' इति। ईश्वरार्पणबुद्ध्या क्रियमाणं विविदिषाजनकम्। तच्च भगवता दर्शितम्—

'यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्'॥
(भ. गी. ९. २७)

---

* नित्येषु कर्मसु चित्तशुद्धेः प्रधानफलत्वात् उपसर्जनत्वेन भविष्यतोऽपि भोगस्य तदनुष्ठातॄणां नापेक्षेति भावः। यतस्ते हि बुद्धिशुद्ध्यनुरोधेन भोगं भङ्गुरं क्षणविनाशिनं अवलोकयन्ति। कः खलु शाश्वतसुखप्राप्तिसाधनं फलं विहाय क्षणभङ्गुरमिच्छेत्? न कोऽपीत्यर्थः।

---

१. All but A. omit बुद्धि॰ २. G. omits एव. ३. D. omits the whole from शुद्धिस्तु॰ (p. 60, l. 8) to सातिशयत्व.— ४. For अष्टाचत्वारिंशत् A. and G. read चत्वारिंशत्. ५. A. adds अष्टावात्मगुणा after संस्काराः; and H. omits स. ६. All except A. and I. substitute अवाप्नोति for गच्छति. ७. H. and I. read भगवतेरितम् for भगवता दर्शितम्.

इति गीतायामपि । तत्र संस्कारेण चित्तस्य वेदनयो-
ग्यतामात्रं सम्पद्यते । विविदिषा तु प्रवृत्तिमुत्पाद्य अवश्यं
वेदनं सम्पादयति । तस्मात् मुमुक्षोरीश्वरार्पणं प्रशस्तम् । तदेव
हितशब्देन धर्मस्याभिमतसाधनत्वाभिधानात्—अभीष्टसिद्धिः
प्रयोजनं—इत्युक्तं भवति ।

धर्मशब्देन विषयो निर्दिश्यते । अभ्युदय-निःश्रेयसे
साधनत्वेन धारयति—इति धर्मः । स च लक्षण—प्रमाणाभ्यां*
चोदनासूत्रे†र्व्यवस्थापितः । ननु—चोदनाऽवगम्यस्य न
स्मृतिविषयत्वम् । सर्वत्रानन्यलभ्यस्यैव विषयत्वावगमात् ।
अथ मन्यसे चोदनागम्योऽपि अर्थवादपरिहारेण शाखा-
न्तरगतविशेषोपसंहारेण च अनुष्ठानक्रमसौकर्याय सङ्गृह्यते
इति । तन्न । कल्पसूत्रेषु तथा सङ्गृहीतत्वात् । अतो न धर्मस्य
विषयत्वम् —इत्याशङ्क्याह । 'शौचाचारम्' इति । अयं
भावः । द्विविधो धर्मः । श्रौतः स्मार्तश्च । तत्र अग्न्याधाना-

---

*लक्ष्यते येन तल्लक्षणं यथा धूमोऽग्नेः । यो ऽर्थः पुरुषं निःश्रेयसेन
युनक्ति स धर्मः निःश्रेयःसम्पादकत्वं धर्मस्य लक्षणम् । प्रमाणं तु
चोदना । क्रियायाः प्रवर्तकं वचनं चोदनेत्युच्यते । आचार्यचोदितः
करोति इति हि दृश्यते । विस्तरस्तु शबरभाष्ये द्रष्टव्यः ।

† 'चोदनालक्षणो ऽर्थो धर्मः' (पू. मी. १ । १ । २) इत्यादीनि
चोदनासूत्राणि ।

---

१. A. omits the whole from विविदिषाजनकं (p. ६१. l. १८) to सम्पद्यते
oth inclusive. २. A. omits तु. ३. A. reads -साधक- for -साधन-. ४. A.
nd I. read -सूत्रे व्यवस्थापितः for -सूत्रैर्व्यवस्थापितः. ५. For चोदनागम्यो
पि B. C. D. E. and F. read चोदनागम्ये ऽपि. ६. A. and I.
mit अभि-.

दिपूर्वको ऽधीतप्रत्यक्षवेदमूलो दर्श-पूर्णमासादिः श्रौतः। अनु-मितपरोक्षशाखामूलः[१] शौचाचमनादिः स्मार्तः। तत्र आधा-नादेः कल्पसूत्रेषु सङ्ग्रहे ऽपि शौचादेरसङ्ग्रहात् विषयत्वं —इति।

ननु— स्मृत्यन्तरेष्वपि शौचादिरुक्तः— इत्यत आह। 'वर्त्तमाने कलौ युगे' इति। कलौ युगे वर्त्तमाने सति याजनाध्यापनादीनां जीवनाय असम्पूर्तेः मानुषाणां जीव-नाय अभ्युदयाय निःश्रेयसाय च हितः सुकरो यो धर्मः ब्राह्मणकर्तृकः* कृष्यादिः सो ऽत्र प्राधान्येन प्रतिपाद्यते—इति अनन्यलभ्यत्वात् विषयत्वमित्यर्थः।

'यथावत्' इतिपदेन कार्त्स्न्यमभिदधानः[२] सङ्कोचं निवा-रयति। न त्वन्यथाकथनं निवार्यते। स्मर्तॄणामभ्रान्त्यवि-प्रलम्भाभ्यां तदप्रसक्तेः[३]। अत एव सत्यवतीसुत इति सम्बो-धनम्। यदा योषिदपि सती[४] सत्यवती माता सत्यवादिनी†

* इदमग्रे मूल एव विस्तरेण स्पष्टीभविष्यति।

† यथोक्तं महाभारते—

'रूप-सत्त्वसमायुक्ता सर्वैः समुदिता गुणैः।
सा तु सत्यवती नाम सत्यवादित्वसंश्रयात्'॥

इति। अत्र चतुर्थचरणे 'मत्स्यघात्यभिसंश्रयात्' इत्यपि पाठांतरं मुंबईमुद्रितपुस्तके दृश्यते।

१. D. reads -मूलशौचा- for -मूलः शौचा.- २. For कार्त्स्न्यमभिदधानः A. and I. read कार्त्स्न्याभिधायिना. ३. For स्मर्तॄणामभ्रान्त्यविप्रलंभाभ्यां तदप्रसक्तेः A. and I. read स्मर्तॄणां भ्रान्ति-विप्रलम्भाद्यप्रसक्तेः ४. A. omits सती; while all others except I. omit सत्यवती and retain सती.

तदा किमु वक्तव्यं वेदाचार्यस्तत्पुत्रः सत्यवादी—इति। चकारेण सुमहत्त्वं समुच्चिनोति।

अत्र—प्रोक्तानामधिकारि-प्रयोजन-विषयाणां परस्परसम्बन्धो विस्पष्टः। तत्र प्रयोजनाधिकारिणोरर्थ्यमानार्थित्वम्। अधिकारी हि प्रयोजनमर्थयते। प्रयोजन-विषययोश्च जन्यजनकभावः। ज्ञाते धर्मे तदनुष्ठानेनाभ्युदय-निःश्रेयससिद्धेः। अधिकारि-विषययोश्चोपकार्योपकारकभावः। विषयः प्रयोजनमुत्पाद्याधिकारिणं प्रत्युपकरोति। विषय-ग्रन्थयोश्च प्रतिपाद्य-प्रतिपादकभावः। तदेवमनुबन्धचतुष्टयस्य सुलभत्वात्समाहितमनस्कैः श्रोतृभिरस्मिन् ग्रन्थे प्रवर्त्तनीयं इति श्लोकद्वयस्य तात्पर्यार्थः॥ १–२॥

ननु—पराशरस्मृत्यवतारे व्यासं प्रति प्रश्नो व्यधिकरण—त्याशङ्क्य श्लोकद्वयेन परिहरति—

तच्छ्रुत्वा ऋषिवाक्यं तु सशिष्योऽग्न्यर्कसन्निभः।
प्रत्युवाच महातेजाः श्रुति-स्मृतिविशारदः॥ ३॥
न चाहं सर्वतत्त्वज्ञः कथं धर्मं वदाम्यहम्।
अस्मत्पितैव प्रष्टव्य इति व्यासः सुतोऽब्रवीत्॥ ४॥

तदित्यादिना। सुमन्तु-वैशम्पायन-जैमिनि-पैलैः चतुर्वेदप्रवर्तकैः पुराणप्रवर्त्तकसूतसहितैः शिष्यैः सह वर्तते इति स-

१. D. E. G. and I. read सत्यवादीति प्रकारेण सुमहत्त्वम्, and this brings the two sentences into one. २. A. and I. read अधिकारिभिः प्रयोजनमर्थ्यते for अधिकारी हि प्रयोजनमर्थयते; while D. omits हि. ३. A. alone reads मुनिवाक्यं for ऋषिवाक्यं. ४. B. C. and F. read धर्मतत्त्वज्ञः for सर्वतत्त्वज्ञः.

शिष्यः । यथा अग्निर्ज्वालाभिरुपेतः यथा च सूर्यो रश्मिभिः एवमसौ स्वसमानविद्यैः शिष्यैरुपेतः । अत एव महातेजस्त्वम् । तेजःशब्देनात्र ब्रह्मवर्चसं विवक्षितम् । इतरेण तेजसा प्रयोजनाभावात् । तामेव विवक्षां 'श्रुतिविशारदः' इत्यनेन स्पष्टयति । श्रुति-स्मृत्योः क्रमेणाग्न्यर्कदृष्टान्तौ योजनीयौ । अग्निः सन्निकृष्टमेव दहन्नपि अहनि रात्रौ चाविशेषेण दहति । एवमधीयमानप्रत्यक्षश्रुतिषु कतिपया एव धर्मा ज्ञायमाना[1] युक्तावस्थायामयुक्तावस्थायां[2] चाविशेषेण ज्ञायन्ते अर्को दिवैव भासयन्नपि सन्निकृष्टं विप्रकृष्टं च अखिलं भासयति । एवं युक्तावस्थायामेव स्मर्यमाणा अपि विप्रकीर्णानेकशाखानिष्ठधर्माः सर्वेऽपि स्मर्यन्ते । अथ वा तपसा अत्यन्तपरिशुद्धोऽयं इत्यस्मिन्नर्थे अग्निदृष्टान्तः[3] । 'अग्निः शुचिव्रततमः' (ऋ. सं. ६. ३. ४०. १; तै. सं. ५. ३. ५. ११) इति श्रुतेः । बहुविषयाभिव्यक्तिक्षमत्वेऽर्कदृष्टान्तः[4] ॥ ३ ॥

ननु—एवं सति—'न चाहं सर्वतत्त्वज्ञः'—इति वचनं व्यहतम् । न[5] । तस्य पितृप्रशंसारूपार्थवादत्वात् । 'अपशवो वा अन्ये गो-अश्वेभ्यः' (तै. सं. ५. २. ९. ४) इति वचनं यथा गवाश्वप्रशंसापरम् । न त्वजादीनां पशुत्वं निषेधति । प्रत्यक्षविरोधात्, आग्नीषोमीयादिपशुविधिविरोधाच्च[6] । एवमिदं व्यासवचनं न व्यासस्य सर्वज्ञत्वं निषेधति । किन्तु पितरं

१. After ज्ञायमाना A. and I. add भवन्ति ; but it seems to have no proper use in this place. B. C. and F. omit ज्ञायमाना. २ B. C. and F. omit अयुक्तावस्थायां. ३. B. C. E. and F. read अग्निर्दृष्टान्तः for अग्निदृष्टान्तः. ४. B. C. E. and F. read अर्कौ दृष्टान्त for अर्कदृष्टान्तः. ५. Except A. and I. all others omit न. ६. D. reads अग्निष्टोमीयादि for आग्नीषोमीयादि-.

प्रशंसति। यद्वा। गुरुविषये विनयः कर्त्तव्य—इत्याद्याचार-शिक्षार्थमिदमुक्तम्। अथवा 'न चाहम्'—इति वदतो व्यासस्यायमाशयः—सम्प्रति कलिधर्माः पृच्छ्यन्ते। तत्र[1] न तावदहं स्वतः कलिधर्मतत्त्वं जानामि। अस्मत्पितुरेव तत्र प्रावीण्यात्। अत एव 'कलौ पाराशराः स्मृताः' (प. स्मृ. १. २४) इति वक्ष्यते। यदि पितृप्रसादात् मम तदभिज्ञानं तर्हि स एव पिता प्रष्टव्यः। न हि मूलवक्तरि लभ्यमाने प्रणालिका[2] युज्यते—इति*।

पालनात् 'पिता'। पालकत्वं च अत्र कलिधर्मोपदेशेन—इति प्रस्तावानुसारेण द्रष्टव्यम्। अनयैव विवक्षया जनक-तातादि-शब्दानुपेक्ष्य पितृशब्दं प्रयुङ्क्ते। एवकारेण अन्ये स्मर्त्तारो व्यावर्त्यन्ते। यद्यपि मन्वादयः कलिधर्माभिज्ञाः तथापि पराशरस्यास्मिन्विषये तपोविशेषबलादसाधारणः कश्चिदतिशयो द्रष्टव्यः। यथा काण्व-माध्यन्दिन-काठक-कौथुम-तैत्तिरीयादिशाखासु कण्वादीनामसाधारणत्वं तद्वदत्रा[3]वगन्तव्यम्।

'व्यासः[4] सुतः' इत्युक्तेरयमाशयः—कलिधर्मसम्प्रदायोतस्यापि पराशरसुतस्य यदा तद्धर्मरहस्याभिधाने सङ्कोचः

---

* नन्दपण्डितस्तु—'पराशरस्यैव प्रतिकल्पं कलिधर्मप्रवचनाधिकारिपुरुषत्वं श्रुति-स्मृतिभ्यामवगत्य स्वस्यानुचितं कलिधर्मानुशासनं मन्वानो व्यासः सुतो ऽहं धर्मं कथं वदामि अस्मत्पितैव प्रष्टव्य इत्यवदत्' इत्याह। धरणीधरो ऽपि—'पराशरस्यैव प्रतिकल्पं कलिधर्मप्रवचनाधिकारित्वमिति गूढोऽभिप्राय' इत्युक्तवान्।

---

१. A. and I. omit तत्र. २. We read प्रणालिका though the MSS. read प्रणाडिका, there being no difference between ड and ल in Sanskrit. ३. A. omits अत्र. ४. All but H. read सुतो व्यासः for व्यासः सुत..

तदा किमु वक्तव्यमन्येषाम्–इति । तदेवं व्यासमुखेन पराशरे गौरवातिशयबुद्धिमुत्पादयितुं पराशरस्मृत्यवतारे ऽपि व्यासं प्रति प्रश्नो न व्यधिकरणः इत्यवगन्तव्यम् ॥ ४ ॥

यथाविधि गुरूपसत्त्या विद्याप्राप्तिः इत्यभिप्रेत्य उपसत्ति[1] दर्शयति–

> ततस्त[2] ऋषयः सर्वे धर्मतत्त्वार्थकाङ्क्षिणः ।
> ऋषिं व्यासं पुरस्कृत्य गता[3] बदरिकाश्रमम्[4] ॥५॥

इति । सर्वत्र वस्तुनि सामान्येन ज्ञाते विशेषेणाज्ञाते ज्ञानाकाङ्क्षा भवति । धर्मशब्दो ऽत्र सामान्यमभिधत्ते । तत्त्वार्थशब्दो विशेषम् । तत्र सामान्यं अधीतवेदेन[5] श्रुतव्याकरणेन[6] लक्षण-प्रमाणकुशलेन[7] पुरुषेण ज्ञायते । वेदो हि[8] धर्मसामान्यं निरूपयति । 'धर्मो विश्वस्य जगतः प्रतिष्ठा' ( म. ना. उ. १. २२ )–इति । शाखान्तराध्यायिनस्तु व्याकरणबलात् तदभिज्ञानम् । अभ्युदय-निःश्रेयसे धारयति–इति व्युत्पत्तेर्दर्शयितत्वात् । औणादिकप्रक्रियायां कुशलश्चेत्[9] लक्षणेन जानातु[10] । अर्थत्वे तु[11]–चोदनागम्यो धर्मः–इति लक्षणम् । तत्र अर्थशब्देन श्येनाद्यभिचाराणां[12] अनर्थानां निवृत्तिः । 'श्येन-

---

१. D. E. G. and H. read उपपत्तिं for उपसत्तिं. २. K. and L. read ततस्तु for ततस्त. ३. A. and I. read गत्वा for गता. ४. D. E. and G read बदरिकाश्रमान for बदरिकाश्रमम्. ५. B. C. and F. read अधीते वेदे for अधीतवेदेन. ६. E. and G. read अश्रुतव्याकरणेन for श्रुतव्याकरणेन ७. B. has -प्रमाणाकुशलेन for -प्रमाणकुशलेन. ८. A. omits हि. ९. A. D. E. and I. read -प्रक्रियायामकुशल- for -प्रक्रियायां कुशल-. १० A. and I. read जानाति for जानातु. ११. A. replaces सति by तु. १२ A. alone reads श्येनाभिचरणादीनां for श्येनाद्यभिचाराणां.

नाभिचरन् यजेत*' इति श्रुत्युक्तस्य श्येननामकयागफलस्य शत्रुवधस्य 'न हिंस्यात् सर्वभूतानि'-इति निषेधविषयत्वेन अनर्थत्वात् तद्धेतोः श्येनस्याप्यनर्थत्वम् । श्येनस्य स्वरूपतो निषेधाविषयत्वात् विधेयत्वमप्यविरुद्धम् । न च-निषेधविषयत्वेन आग्नीषोमीयवधस्यापि अर्थशब्देन व्यावृत्त्वादव्याप्तिः-इति शङ्कनीयम् । तत्र विशेषविधिना सामान्यनिषेधस्य अपोहितत्वात् । चोदनाशब्देन प्रत्यक्षादेर्व्यावृत्तिः । 'घटं कुरु' इति लौकिकविधावतिव्याप्तिः-इति चेत् । न । चोदनाशब्दस्य वेदविषये प्रसिद्धत्वात् । पङ्कजादाविव अवयवार्थस्य प्रवृत्तिनिमित्तमात्रत्वात् । उक्तलक्षणाभिधानेनैव 'धर्मे चोदनाप्रमाणम्'-इत्यर्थादभिहितं भवति । एवं लक्षणादिभिः सामान्येन ज्ञाते ऽपि ऋषीणां तद्विशेषज्ञाने भवत्येवाकाङ्क्षा†।

तत्र विशेषप्रश्नकुशलत्वात् व्यासस्य पुरस्कारः । कलि-

---

* अयं च श्येनयागः आश्वलायनश्रौतसूत्रे (अ. ९. ७) उक्तः स्य च इतिकर्तव्यतादिकं तत्रैव द्रष्टव्यम् । आभिचारिकमिदं कर्म अस्य र्थत्वेनैव वेदे उक्तम् ।

† नन्दपण्डित-धरणीधरौ तु-'धर्मतत्त्वार्थकाङ्क्षिणः इति- कलिकालानुष्ठेयस्य धर्मस्य तत्त्वं अबाधितं रूपं स एवार्थः तं काङ्क्षन्ति' इति व्याख्यातवन्तौ ।

---

१. A. reads श्रुतेः उक्तस्य for श्रुत्युक्तस्य; while all others except I. omit इति altogether. २. B. C. and F. read अप्राप्तिः for अव्याप्तिः. ३. We read with A. while all others read विधिष्वतिव्याप्तिः for -विधावतिव्याप्तिः. ४. A. and I. read प्रवृत्त्यानिमित्तत्वात् for प्रवृत्तिनिमित्तमात्रत्वात्. ५. Here we read with A. and I.; while all others read सामान्ये ज्ञाते ऽपि for सामान्येन ज्ञाते ऽपि.

